# नित्य सन्ध्या वन्दनम्

## शरीर शुद्धि

अपवित्रः पवित्रो वा सर्वावस्थां" गतोऽपिवा |

यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तर श्शुचिः ‖

पुण्डरीकाक्ष ! पुण्डरीकाक्ष ! पुण्डरीकाक्षाय नमः |

**आचमनः**

ॐ आचम्य

ॐ केशवाय स्वाहा

ॐ नारायणाय स्वाहा

ॐ माधवाय स्वाहा (इति त्रिराचम्य)

ॐ गोविन्दाय नमः (पाणी मार्जयित्वा)

ॐ विष्णवे नमः

ॐ मधुसूदनाय नमः (ओष्ठौ मार्जयित्वा)

ॐ त्रिविक्रमाय नमः

ॐ वामनाय नमः (शिरसि जलं प्रोक्ष्य)

ॐ श्रीधराय नमः

ॐ हृषीकेशाय नमः (वामहस्तॆ जलं प्रोक्ष्य)

ॐ पद्मनाभाय नमः (पादयोः जलं प्रोक्ष्य)

ॐ दामोदराय नमः (शिरसि जलं प्रोक्ष्य)

ॐ सङ्कर्षणाय नमः (अङ्गुळिभिश्चिबुकं जलं प्रोक्ष्य)

ॐ वासुदेवाय नमः

ॐ प्रद्युम्नाय नमः (नासिकां स्पृष्ट्वा)

ॐ अनिरुद्धाय नमः

ॐ पुरुषोत्तमाय नमः

ॐ अधोक्षजाय नमः

ॐ नारसिंहाय नमः (नेत्रे श्रोत्रे च स्पृष्ट्वा)

ॐ अच्युताय नमः (नाभिं स्पृष्ट्वा)

ॐ जनार्धनाय नमः (हृदयं स्पृष्ट्वा)

ॐ उपेन्द्राय नमः (हस्तं शिरसि निक्षिप्य)

ॐ हरये नमः

ॐ श्रीकृष्णाय नमः (अंसौ स्पृष्ट्वा)

ॐ श्रीकृष्ण परब्रह्मणे नमो नमः

(एतान्युच्चार्य उप्यक्त प्रकारं कृते अङ्गानि शुद्धानि भवेयुः)

**भूतोच्चाटन**

उत्तिष्ठन्तु | भूत पिशाचाः | ये ते भूमिभारकाः | ये तेषामविरोधेन | ब्रह्मकर्म समारभे | ॐ भूर्भुवस्सुवः |

दैवी गायत्री चन्दः प्राणायामे विनियोगः

(प्राणायामं कृत्वा कुम्भके इमं गायत्री मन्त्रमुच्छरेत्)

**प्राणायामः**

ॐ भूः | ॐ भुवः | ओगं् सुवः | ॐ महः | ॐ जनः | ॐ तपः | ओगं् सत्यम् |

ॐ तथ्स'वितुर्वरे''ण्यं भर्गो' देवस्य' धीमहि |

धियो यो नः' प्रचोदया''त् ‖

ओमापो ज्योती रसोऽमृतं ब्रह्म भू-र्भुव-स्सुवरोम् ‖ (तै. अर. 10-27)

**सङ्कल्पः**

ममोपात्त, दुरित क्षयद्वारा, श्री परमेश्वर मुद्दिस्य, श्री परमेश्वर प्रीत्यर्थं, शुभे, शोभने, अभ्युदय मुहूर्ते, श्री महाविष्णो राज्ञया, प्रवर्त मानस्य, अद्य ब्रह्मणः, द्वितीय परार्थे, श्वेतवराह कल्पे, वैवश्वत मन्वन्तरे, कलियुगे, प्रथम पादे, (भारत देशः - जम्बू द्वीपे, भरत वर्षे, भरत खण्डे, मेरोः दक्षिण/उत्तर दिग्भागे; अमेरिका - क्रौञ्च द्वीपे, रमणक वर्षे, ऐन्द्रिक खण्डे, सप्त समुद्रान्तरे, कपिलारण्ये), शोभन गृहे, समस्त देवता ब्राह्मण, हरिहर गुरुचरण सन्निथौ,

अस्मिन्, वर्तमान, व्यावहारिक, चान्द्रमान, ॥. संवत्सरे, ॥. अयने, ॥. ऋते, ॥. मासे, ॥. पक्षे, ॥. तिथौ, ॥. वासरे, ॥. शुभ नक्षत्र, शुभ योग, शुभ करण, एवङ्गुण, विशेषण, विशिष्ठायां, शुभ तिथौ, श्रीमान्, ॥. गोत्रः, ॥. नामधेयः, ॥. गोत्रस्य, ॥. नामधेयोहंः प्रातः/मध्याह्निक/सायं सन्ध्याम् उपासिष्ये ‖

**मार्जनः**

ॐ आपोहिष्ठा म'योभुवः' | ता न' ऊर्जे द'धातन | महेरणा'य चक्ष'से | यो वः' शिवत'मो रसः' | तस्य' भाजयते ह नः | उशतीरि'व मातरः' | तस्मा अर'ङ्ग माम वः | यस्य क्षया'य जिन्व'थ | आपो' जनय'था च नः | (तै. अर. 4-42)

(इति शिरसि मार्जयेत्)

(हस्तेन जलं गृहीत्वा)

**प्रातः काल मन्त्राचमनः**

सूर्य श्च, मामन्यु श्च, मन्युपतय श्च, मन्यु'कृतेभ्यः | पापेभ्यो' रक्षन्ताम् | यद्रात्र्या पाप' मकार्षं | मनसा वाचा' हस्ताभ्यां | पद्भ्या मुदरे'ण शिश्ञ्चा | रात्रि स्तद'वलुम्पतु | यत्किञ्च' दुरितं मयि' | इदमहं मा ममृ'त यो नौ | सूर्ये ज्योतिषि जुहो''मि स्वाहा'' ‖ (तै. अर. 10. 24)

**मध्याह्न काल मन्त्राचमनः**

आपः' पुनन्तु पृथिवीं पृ'थिवी पूता पु'नातु मां | पुनन्तु ब्रह्म'णस्पति र्ब्रह्मा' पूता पु'नातु मां | यदुच्छि'ष्ट मभो''ज्यं यद्वा' दुश्चरि'तं मम' | सर्वं' पुनन्तु मा मापो'ऽसता ञ्च' प्रतिग्रहग्ग् स्वाहा'' ‖ (तै. अर. परिशिष्टः 10. 30)

**सायङ्काल मन्त्राचमनः**

अग्नि श्च मा मन्यु श्च मन्युपतय श्च मन्यु'कृतेभ्यः | पापेभ्यो' रक्षन्तां | यदह्ना पाप' मकार्षं | मनसा वाचा' हस्ताभ्यां | पद्भ्या मुदरे'ण शिश्ञ्चा | अह स्तद'वलुम्पतु | य त्किञ्च' दुरितं मयि' | इद महं मा ममृ'त योनौ | सत्ये ज्योतिषि जुहोमि स्वाहा ‖ (तै. अर. 10. 24)

(इति मन्त्रेण जलं पिबेत्)

आचम्य (ॐ केशवाय स्वाहा, ॥. श्री कृष्ण परब्रह्मणे नमो नमः)

**द्वितीय मार्जनः**

दधि क्रावण्णो' अकारिषं | जिष्णो रश्व'स्य वाजि'नः |

सुरभिनो मुखा'करत्प्रण आयूगं'षि तारिषत् ‖

(सूर्यपक्षे लोकयात्रा निर्वाहक इत्यर्थः)

ॐ आपो हिष्ठा म'योभुवः' | ता न' ऊर्जे द'धातन | महेरणा'य चक्ष'से | यो वः' शिवत'मो रसः' | तस्य' भाजयते ह नः | उशतीरि'व मातरः' | तस्मा अर'ङ्ग माम वः | यस्य क्षया'य जिन्व'थ | आपो' जनय'था च नः ‖ (तै. अर. 4. 42)

**पुनः मार्जनः**

हिर'ण्यवर्णा श्शुच'यः पावकाः या सु'जातः कश्यपो या स्विन्द्रः' | अग्निं या गर्भ'न्-दधिरे विरू'पा स्तान आपश्शग्ग् स्योना भ'वन्तु | या सागं राजा वरु'णो याति मध्ये' सत्यानृते अ'वपश्यं जना'नां | मधु श्चुतश्शुच'यो याः पा'वका स्तान आपश्शग्ग् स्योना भ'वन्तु | यासां'' देवा दिवि कृण्वन्ति' भक्षं या अन्तरि'क्षे बहुथा भव'न्ति | याः पृ'थिवीं पय'सोन्दन्ति' श्शुक्रास्तान आपशग्ग् स्योना भ'वन्तु | याः शिवेन' मा चक्षु'षा पश्यतापश्शिवया' तनु वोप'स्पृशत त्वच' म्मे | सर्वागं' अग्नीग्ं र'प्सुषदो' हुवे वो मयि वर्चो बल मोजो निध'त्त ‖ (तै. सं. 5. 6. 1)

(मार्जनं कुर्यात्)

**अघमर्षण मन्त्रः पापविमोचनं**

(हस्तेन जलमादाय निश्श्वस्य वामतो निक्षितपेत्)

द्रुपदा दि'व मुञ्चतु | द्रुपदा दिवे न्मु'मुचानः |

स्विन्न स्स्नात्वी मला' दिवः | पूतं पवित्रे'णे वाज्यं'' आप' श्शुन्दन्तु मैन'सः ‖ (तै. ब्रा. 266)

आचम्य (ॐ केशवाय स्वाहा, ॥. श्री कृष्ण परब्रह्मणे नमो नमः)

प्राणायामम्य

**लघुसङ्कल्पः**

पूर्वोक्त एवङ्गुण विशेषण विशिष्ठायां शुभतिथौ ममोपात्त दुरित क्षयद्वारा श्री परमेश्वर मुद्दिस्य श्री परमेश्वर प्रीत्यर्थं प्रातस्सन्ध्याङ्ग यथा कालोचित अर्घ्यप्रदानं करिष्ये ॥

**प्रातः कालार्घ्य मन्त्रं**

ॐ भूर्भुवस्सुवः' ॥ तथ्स'वितुर्वरे''ण्यं भर्गो' देवस्य' धीमहि | धियो यो नः' प्रचोदया''त् ॥ 3 ॥

**मध्याह्नार्घ्य मन्त्रं**

ॐ हगं सश्शु'चिष द्वसु'रन्तरिक्षस द्दोता' वेदिषदति'थि र्दुरोणसत् | नृष द्व'रस दृ'तस द्व्यो'म सदब्जा गोजा ऋ'तजा अ'द्रिजा ऋतम्-बृहत् ॥ (तै. अर. 10. 4)

**सायं कालार्घ्य मन्त्रं**

ॐ भूर्भुवस्सुवः' ॥ तथ्स'वितुर्वरे''ण्यं भर्गो' देवस्य' धीमहि | धियो यो नः' प्रचोदया''त् ॥ ॐ भूः | ॐ भुवः | ओगं् सुवः | ॐ महः | ॐ जनः | ॐ तपः |

ओगं सत्यम् | ॐ तथ्स'वितुर्वरे''ण्यं भर्गो' देवस्य' धीमहि | धियो यो नः' प्रचोदया''त् ‖ ओमापो ज्योती रसोऽमृतं ब्रह्म भू-र्भुव-स्सुवरोम् ‖

(इत्यञ्जलित्रयं विसृजेत्)

**कालातिक्रमण प्रायश्चित्तं आचम्य॥.**

पूर्वोक्त एवङ्गुण विशेषण विशिष्ठायां शुभतिथौ ममोपात्त दुरित क्षयद्वारा श्री परमेश्वर मुद्दिस्य श्री परमेश्वर प्रीत्यर्थं कालातिक्रम दोषपरिहारार्थं चतुर्था अर्घ्यप्रदानं करिष्ये ‖

ॐ भूर्भुवस्सुवः' ‖ तथ्स'वितुर्वरे''ण्यं भर्गो' देवस्य' धीमहि | धियो यो नः' प्रचोदया''त् ‖ ॐ भूः | ॐ भुवः | ओगं सुवः | ॐ महः | ॐ जनः | ॐ तपः | ओगं सत्यम् | ॐ तथ्स'वितुर्वरे''ण्यं भर्गो' देवस्य' धीमहि | धियो यो नः' प्रचोदया''त् ‖ ओमापो ज्योती रसोऽमृतं ब्रह्म भू-र्भुव-स्सुवरोम् ‖

(इति जलं विसृजेत्)

**सजल प्रदक्षिणं**

ॐ उद्यन्त'मस्तं यन्त' मादित्य म'भिथ्याय न्कुर्वन्-ब्रा''ह्मणो विद्वान् त्सकल'म्-भद्रम'श्नुते असावा'दित्यो ब्रह्मेति ‖ ब्रह्मैव सन्-ब्रह्माप्येति य एवं वेद ‖ असावादित्यो ब्रह्म ‖ (तै. अर. 2. 2)

(एवं अर्घ्यत्रयं दद्यात् कालातिक्रमणे पूर्ववत्)

(पश्चात् हस्तेन जलमादाय प्रदक्षिणं कुर्यात्)

(द्विराचम्य प्राणायाम त्रयं कृत्वा)

आचम्य (ॐ केशवाय स्वाहा, ॥. श्री कृष्ण परब्रह्मणे नमो नमः)

**सन्ध्याङ्ग तर्पणं**

प्रातःकाल तर्पणं

सन्ध्यां तर्पयामि, गायत्रीं तर्पयामि, ब्राह्मीं तर्पयामि, निमृजीं तर्पयामि ‖

**मध्याह्न तर्पणं**

सन्ध्यां तर्पयामि, सावित्रीं तर्पयामि, रौद्रीं तर्पयामि, निमृजीं तर्पयामि ‖

**सायङ्काल तर्पणं**

सन्ध्यां तर्पयामि, सरस्वतीं तर्पयामि, वैष्णवीं तर्पयामि, निमृजीं तर्पयामि ‖

(पुनराचमनं कुर्यात्)

**गायत्री अवाहन**

ओमित्येकाक्ष'रं ब्रह्म | अग्निर्देवता ब्रह्म' इत्यार्षम् | गायत्रं छन्दं परमात्मं' सरूपम् | सायुज्यं वि'नियोगम् ‖ (तै. अर. 10. 33)

आया'तु वर'दा देवी अक्षरं' ब्रह्मसंमितम् | गायत्रीं'' छन्द'सां मातेदं ब्र'ह्म जुषस्व' मे | यदह्ना''त्-कुरु'ते पापं तदह्ना''त्-प्रतिमुच्य'ते | यद्रात्रिया''त्-कुरु'ते पापं तद्रात्रिया''त्-प्रतिमुच्य'ते | सर्व' वर्णे म'हादेवि सन्ध्यावि'द्ये सरस्व'ति ‖

ओजो'ऽसि सहो'ऽसि बल'मसि भ्राजो'ऽसि देवानां धामनामा'सि विश्व'मसि विश्वायु-स्सर्व'मसि सर्वायु-रभिभूरों | गायत्री-मावा'हयामि सावित्री-मावा'हयामि सरस्वती-मावा'हयामि छन्दर्षी-नावा'हयामि श्रिय-मावाह'यामि गायत्रिया गायत्री च्छन्दो विश्वामित्रऋषि स्सविता देवताऽग्निर्-मुखं ब्रह्मा शिरो विष्णुर्-हृदयगं् रुद्र-श्शिखा पृथिवी योनिः प्राणापान व्यानोदान समाना सप्राणा श्वेतवर्णा साङ्ख्यायन सगोत्रा गायत्री चतुर्विगं् शत्यक्षरा त्रिपदा' षट्-कुक्षिः पञ्च-शीर्षोपनयने वि'नियोगः | ॐ भूः | ॐ भुवः | ओगं् सुवः | ॐ महः | ॐ जनः | ॐ तपः | ओगं् सत्यम् | ॐ तथ्स'वितुर्वरे''ण्यं भर्गो' देवस्य' धीमहि | धियो यो नः' प्रचोदया''त् ‖ ओमापो ज्योती रसोऽमृतं ब्रह्म भू-र्भुव-स्सुवरोम् ‖ (महानारायण उपनिषत्)

आचम्य (ॐ केशवाय स्वाहा, ॥. श्री कृष्ण परब्रह्मणे नमो नमः)

**जपसङ्कल्पः**

पूर्वोक्त एवङ्गुण विशेषण विशिष्ठायां शुभतिथौ ममोपात्त दुरित क्षयद्वारा श्री परमेश्वर मुद्दिस्य श्री परमेश्वर प्रीत्यर्थं सन्ध्याङ्ग यथाशक्ति गायत्री महामन्त्र जपं करिष्ये ‖

**करन्यासः**

ॐ तथ्स'वितुः ब्रह्मात्मने अङ्गुष्टाभ्यां नमः |

वरे"ण्यं विष्णवात्मने तर्जनीभ्यां नमः |

भर्गो' देवस्य' रुद्रात्मने मध्यमाभ्यां नमः |

धीमहि सत्यात्मने अनामिकाभ्यां नमः |

धियो यो नः' ज्ञानात्मने कनिष्टिकाभ्यां नमः |

प्रचोदया"त् सर्वात्मने करतल करपृष्टाभ्यां नमः |

**अङ्गन्यासः**

ॐ तथ्स'वितुः ब्रह्मात्मने हृदयाय नमः |

वरे"ण्यं विष्णवात्मने शिरसे स्वाहा |

भर्गो' देवस्य' रुद्रात्मने शिखायै वषट् |

धीमहि सत्यात्मने कवचाय हुं |

धियो यो नः' ज्ञानात्मने नेत्रत्रयाय वौषट् |

प्रचोदया"त् सर्वात्मने अस्त्रायफट् |

ॐ भूर्भुवस्सुवरोमिति दिग्भन्धः।

**ध्यानम्**

मुक्ताविद्रुम हेमनील धवळच्चायैर्-मुखै स्त्रीक्षणैः।

युक्तामिन्दुनि बद्ध रत्न मकुटां तत्वार्थ वर्णात्मिकां।

गायत्रीं वरदाभयाङ्कुश कशाश्शुभ्रङ्कपालङ्गदां।

शङ्खञ्चक्र मधारविन्द युगळं हस्तैर्वहन्तीं भजे॥

**चतुर्विंशति मुद्रा प्रदर्शनं**

सुमुखं सम्पुटिञ्चैव विततं विस्तृतं तथा।

द्विमुखं त्रिमुखञ्चैव चतुः पञ्च मुखं तथा।

षण्मुखोऽथो मुखं चैव व्यापकाञ्जलिकं तथा।

शकटं यमपाशं च ग्रथितं सम्मुखोन्मुखं।

प्रलम्बं मुष्टिकं चैव मत्स्यः कूर्मो वराहकं।

सिंहाक्रान्तं महाक्रान्तं मुद्गरं पल्लवं तथा।

चतुर्विंशति मुद्रा वै गायत्र्यां सुप्रतिष्ठिताः।

इतिमुद्रा न जानाति गायत्री निष्फला भवेत्॥

यो देव स्सविताऽस्माकं धियो धर्मादिगोचराः |

प्रेरयेत्तस्य यद्भर्गस्त द्वरेण्य मुपास्महे ‖

**गायत्री मन्त्रं**

ॐ भूर्भुवस्सुवः' ‖ तथ्स'वितुर्वरे"ण्यं भर्गो' देवस्य' धीमहि |

धियो यो नः' प्रचोदया"त् ‖

**अष्टमुद्रा प्रदर्शनं**

सुरभिर्-ज्ञान चक्रे च योनिः कूर्मोऽथ पङ्कजं |

लिङ्गं निर्याण मुद्रा चेत्यष्ट मुद्राः प्रकीर्तिताः ‖

ॐ तत्सद्-ब्रह्मार्पणमस्तु |

आचम्य (ॐ केशवाय स्वाहा, ॥. श्री कृष्ण परब्रह्मणे नमो नमः)

द्विः परिमुज्य |

सकृदुप स्पृश्य |

यत्सव्यं पाणिं |

पादं |

प्रोक्षति शिरः |

चक्षुषी |

नासिके |

श्रोत्रे |

हृदयमालभ्य |

**प्रातःकाल सूर्योपस्थानं**

ॐ मित्रस्य' चर्षणी धृत श्रवो' देवस्य' सान सिं | सत्यं चित्रश्र' वस्तमं | मित्रो जनान्' यातयति प्रजानन्-मित्रो दा'धार पृथिवी मुतद्यां | मित्रः कृष्टी रनि'मिषाऽभि च'ष्टे सत्याय' हव्यं घृतव'द्विधेम | प्रसमि'त्त्र मर्त्यो' अस्तु प्रय'स्वा न्यस्त' आदित्य शिक्ष'ति व्रतेन' | न ह'न्यते न जी'यते त्वोतोनैन मगंहो' अश्नो त्यन्ति'तो न दूरात् ‖ (तै. सं. 3.4.11)

**मध्याह्न सूर्योपस्थानं**

ॐ आ सत्येन रज'सा वर्त'मानो निवेश'य न्नमृतं मर्त्य'ञ्च | हिरण्यये'न सविता रथेनाऽदेवो या'ति भुव'ना निपश्यन्' ‖

उद्वय न्तम'स स्परि पश्य'न्तो ज्योति रुत्त'रं | देवन्-दे'वत्रा सूर्य मग'न्म ज्योति' रुत्तमं ‖

उदुत्यं जातवे'दसं देवं व'हन्ति केतवः' | दृशे विश्वा' य सूर्य''म् ‖ चित्रं देवाना मुद'गा दनी'कं चक्षु'र्-मित्रस्य वरु'ण स्याग्नेः | अप्रा द्यावा' पृथिवी अन्तरि'क्षगं् सूर्य' आत्मा जग'त स्तस्थुष'श्च ‖

तच्चक्षु'र्-देवहि'तं पुरस्ता''च्चुक्र मुच्चर'त् | पश्ये'म शरद'श्शतं जीवे'म शरद'श्शतं नन्दा'म शरद'श्शतं मोदा'म शरद'श्शतं भवा'म शरद'श्शतगं् शृणवा'म शरद'श्शतं पब्र'वाम शरद'श्शतमजी'तास्याम शरद'श्शतं जोक्च सूर्यं' दृषे ‖ य उद'गान्महतोऽर्णवा'' द्विभ्राज'मान स्सरिरस्य मध्याथ्समा' वृषभो लो'हिताक्षसूर्यो' विपश्चिन्मन'सा पुनातु ‖

## सायङ्काल सूर्योपस्थानं

ॐ इमम्मे' वरुण शृधी हव' मद्या च' मृडय | त्वा म'वस्यु राच'के ‖ तत्वा' यामि ब्रह्म'णा वन्द'मान स्त दाशा''स्ते यज'मानो हविर्भिः' | अहे'डमानो वरुणेह बोध्युरु'शगं समा'न आयुः प्रमो'षीः ‖

यच्चिद्धिते विशोयथा प्रदेव वरुणव्रतं | मिनीमसिद्य विद्यवि | यत्किञ्चेदं वरुणदैव्ये जनेऽभिद्रोह म्मनुष्याश्चरामसि | अचित्ते यत्तव धर्मायुयोपि ममान स्तस्मा देनसो देवरीरिषः | कितवासो यद्रिरिपुर्नदीवि यद्वाघा सत्यमुतयन्न विद्म | सर्वाताविष्य शिधिरेवदेवा थातेस्याम वरुण प्रियासः ‖ (तै. सं. 1.1.1)

**दिग्देवता नमस्कारः**

(एतैर्नमस्कारं कुर्यात्)

ॐ नमः प्राच्यै' दिशे याश्च' देवता' एतस्यां प्रति'वसन्त्ये ताभ्य'श्च नमः' |

ॐ नमः दक्षिणायै दिशे याश्च' देवता' एतस्यां प्रति'वसन्त्ये ताभ्य'श्च नमः' |

ॐ नमः प्रती''च्यै दिशे याश्च' देवता' एतस्यां प्रति'वसन्त्ये ताभ्य'श्च नमः' |

ॐ नमः उदी''च्यै दिशे याश्च' देवता' एतस्यां प्रति'वसन्त्ये ताभ्य'श्च नमः' |

ॐ नमः ऊर्ध्वायै' दिशे याश्च' देवता' एतस्यां प्रति'वसन्त्ये ताभ्य'श्च नमः' |

ॐ नमोऽध'रायै दिशे याश्च' देवता' एतस्यां प्रति'वसन्त्ये ताभ्य'श्च नमः' |

ॐ नमोऽवान्तरायै' दिशे याश्च' देवता' एतस्यां प्रति'वसन्त्ये ताभ्य'श्च नमः' |

**मुनि नमस्कारः**

नमो गङ्गा यमुनयोर्-मध्ये ये' वसन्ति ते मे प्रसन्नात्मान श्चिरञ्जीवितं व'र्धयन्ति नमो गङ्गा यमुनयोर्-मुनि'भ्यश्च नमो नमो गङ्गा यमुनयोर्-मुनि'भ्यश्च न'मः ‖

**सन्ध्यादेवता नमस्कारः**

सन्ध्या'यै नमः' | सावि'त्र्यै नमः' | गाय'त्र्यै नमः' | सर'स्वत्यै नमः' | सर्वा'भ्यो देवता'भ्यो नमः' | देवेभ्यो नमः' | ऋषि'भ्यो नमः' | मुनि'भ्यो नमः' | गुरु'भ्यो नमः' | पितृ'भ्यो नमः' | कामोऽकार्षी'' र्नमो नमः | मन्यु रकार्षी'' र्नमो नमः | पृथिव्यापस्तेजो वायु'राकाशात् नमः ‖ (तै. अर. 2.18.52)

ॐ नमो भगवते वासु'देवाय | यागं् सदा' सर्वभूतानि चराणि' स्थावराणि' च | सायं प्रात र्न'मस्यन्ति सा मा सन्ध्या'ऽभिरक्षतु ॥

शिवाय विष्णुरूपाय शिवरूपाय विष्णवे |

शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः ॥

यथा शिवमयो विष्णुरेवं विष्णुमयः शिवः |

यथाऽन्तरं न पश्यामि तथा मे स्वस्तिरायुषि ॥

नमो ब्रह्मण्य देवाय गो ब्राह्मण हिताय च |

जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥

**गायत्री उद्वासन (प्रस्थानं)**

उत्तमे' शिख'रे जाते भूम्यां प'र्वतमूर्थ'नि | ब्राह्मणे''भ्योऽभ्य'नु ज्ञाता गच्चदे'वि यथासु'खम् | स्तुतो मया वरदा वे'दमाता प्रचोदयन्ती पवने'' द्विजाता | आयुः पृथिव्यां द्रविणं ब्र'ह्मवर्चसं मह्यं दत्वा प्रजातुं ब्र'ह्मलोकम् ॥ (महानारायण उपनिषत्)

**भगवन्नमस्कारः**

नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्र पादाक्षि शिरोरु बाहवे |

सहस्र नाम्ने पुरुषाय शाश्वते सहस्रकोटी युग धारिणे नमः ॥

**भूम्याकाशाभि वन्दनं**

इदं द्या'वा पृथिवी सत्यम'स्तु | पितर्-मातर्यदि होप' ब्रुवेवां" |

भूतं देवाना' मवमे अवो'भिः | विद्या मेषं वृजिनं' जीरदा'नुम् ‖

आकाशात्-पतितं तोयं यथा गच्छति सागरं |

सर्वदेव नमस्कारः केशवं प्रतिगच्छति ‖

श्री केशवं प्रतिगच्छत्योन्नम इति |

सर्ववेदेषु यत्पुण्यं | सर्वतीर्थेषु यत्फलं |

तत्फलं पुरुष आप्नोति स्तुत्वादेवं जनार्धनम् ‖

स्तुत्वादेवं जनार्धन ॐ नम इति ‖

वासनाद्-वासुदेवस्य वासितं ते जयत्रयं |

सर्वभूत निवासोऽसि श्रीवासुदेव नमोऽस्तुते ‖

श्री वासुदेव नमोऽस्तुते ॐ नम इति |

**अभिवादः (प्रवर)**

चतुस्सागर पर्यन्तं गो ब्राह्मणेभ्यः शुभं भवतु | ॥. प्रवरान्वित ॥. गोत्रः ॥. सूत्रः ॥. शाखाध्यायी ॥. अहं भो अभिवादये ‖

**ईश्वरार्पणं**

कायेन वाचा मनसेन्द्रियैर्वा | बुद्ध्याऽऽत्मना वा प्रकृते स्स्वभावात् |

करोमि यद्यत्-सकलं परस्मै श्रीमन्नारायणायेति समर्पयामि ‖

हरिः ॐ तत्सत् | तत्सर्वं श्री परमेश्वरार्पणमस्तु |